# परमार्थपथावली

प्रज्ञानांशुप्रतानैः स्थिरचरनिकरव्यापिभिर्व्याप्य लोकान् ।
भुक्त्वा भोगान्स्थविष्ठान्पुनरपि धिषणोद्भासितान्कामजन्यान्॥
पीत्वा सर्वान्विशेषान्स्वपिति मधुरभुङ् मायया भोजयन्नो ।
मायासंख्यातुरीयं परममृतमयं ब्रह्म यत्तन्नतोऽस्मि ॥

—ज्ञानेश्वराश्रमः



# परमार्थपद्यावली


सञ्चयिता सम्पादकश्च

श्रीज्ञानेश्वराश्रमदण्डिस्वामी

[ पुराऽऽसीत्–श्रीबुलाकीरामात्मजो

गौरीशङ्करवाजपेयी

(अशरफावाद, लखनऊ) ]



प्रथमावृत्तिः सं० २०१९ वि०

मूल्यम् :—

देववाणीपरिज्ञानं मुमुक्षुत्वं तथा दृढम् ।

प्रकाशकः
(डाक्टर) श्रीसङ्कटाप्रसादपाण्डेयः
ग्राम असनी, जिला फतेहपुर

वादिव्रातगजेन्द्रदुर्मदघटादुर्गर्वसङ्कर्षणः ।
श्रीमच्छङ्करदेशिकेन्द्रमृगराडायाति सर्वार्थवित् ॥
दूरं गच्छत वादिदुःशठगजाः संन्यासदंष्ट्रायुधो ।
वेदान्तोरुवनाश्रयस्तदपरं द्वैतं वनं भक्षति ॥

मुद्रकः
श्रीगंगाविष्णुशुक्लः
काशीमुद्रणयन्त्रालयाध्यक्षः
कानपुर

## — स्मृतिः —

अस्मत्पूज्यपादपद्माखण्डश्रद्धाभाजनपरममाननीय श्रीपितृव्यचरणानां असनीग्रामनिवासिस्वर्गीय श्रीमत्सिद्धिनाथपाण्डेयसहोदयानां पुण्यस्मृतौ प्रकाशितमिदं पुस्तकम् ।

प्रकाशकः



## — हृदयोद्गारः —

डाक्टरोपाधिधारी श्रीमत्सङ्कटाप्रसादः पाण्डेयः,
सं जयतु सदा परमोदारः परमार्थं एव खलु यद्धयेयः ।
यतचित्तात्मा प्रहसितवदनो विद्यारसिको विनयावनतः,
सज्जनः सदा यतिसेवी च दाता सततं करुणया युतः ।
अस्य प्रमाणमिति प्रत्यक्षं सकृदेव मुदा मत्कथनेन,
सुप्रकाशितं पुस्तकयेतन्नररत्नेन हि निजवित्तेन ।
शब्देषु केषु वै ददाम्यहं धन्यवादमिति जाने नाहम्,
उपकृतः कृतज्ञो भविष्यामि ह्याजीवनमाभारी चाहम् ।

सञ्चयिता



या पठनेन समाहितेन मनसा शान्तिप्रदा सर्वदा ।
या मननेन निहन्ति मानसमलं चाज्ञानध्वान्तापहा ।।
याऽभ्यसनेन ददाति मुक्तिपदवीमानन्दसंदायिनीं ।
सेयं चातितरां सदा विजयते परमार्थपद्यावली ।।



॥ स्वामी भजनानन्द तीर्थ ॥

ॐ

तत्सत्परमात्मने नमः

गुरुवरं शङ्कराचार्यं नत्वा भक्त्या मुहुर्मुहुः ।
उद्धृत्यानेकग्रन्थेभ्यः सञ्चयोऽयं मया कृतः ॥

# ❁ मुक्तिमहत्ता ❁

असुर्या नाम ते लोका अन्धेन तमसावृताः ।
तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥
लब्ध्वा कथंचिन्नरजन्म दुर्लभं तत्रापि पुंस्त्वं श्रुतिपारदर्शनम् ।
यः स्वात्ममुक्तौ न यतेत मूढधीः स ह्यात्महा स्वं विनिहन्त्यसद्ग्रहात् ॥
इतः कोन्वस्ति मूढात्मा यस्तु स्वार्थे प्रमाद्यति ।
दुर्लभं मानुषं देहं प्राप्य तत्रापि पौरुषम् ॥
अश्वत्थमेनं हि विरूढमूलमसङ्गशस्त्रेण दृढेन छित्वा ।
ततः परं तत्परिमार्गितव्यं यस्मिन्गता न निवर्तन्ति भूयः ॥

आदौ मध्ये तथान्ते जनिमृतिफलदं कर्ममूलं विशालं
ज्ञात्वा संसारवृक्षं भ्रममदमुदिताशोकतानेकपत्रम् ।
कामक्रोधादिशाखं सुतपशुवनिताकन्यकापक्षिसंघं
छित्वासंगासिनैनं पटुमतिरभितश्चिन्तयेद्वासुदेवम् ॥

अलमर्थेन कामेन सुकृतेनापि कर्मणा ।
एभ्यः संसारकान्तारे न विश्रान्तमभून्मनः ॥

जन्तूनां नरजन्म दुर्लभमतः पुंस्त्वं ततो विप्रता
तस्माद्वैदिकधर्ममार्गपरता विद्वत्वमस्मात्परम् ।
आत्मानात्मविवेचनं स्वनुभवो ब्रह्मात्मना संस्थिति-
र्मुक्तिर्नो शतकोटिजन्मसुकृतैः पुण्यैर्विना लभ्यते ॥

शरीरं सुरूपं नवीनं कलत्रं धनं मेरुतुल्यं यतश्चारु चित्रम् ।
हरेरंघ्रियुग्मं मनश्चेन्न लग्नं ततः किं ततः किं ततः किं ततः किम् ॥

प्राप्ताः श्रियः सकलकामदुघास्ततः किं
दत्तं पदं शिरसि विद्विषतां ततः किं ।
सम्मानिताः प्रणयिनो विभवैस्ततः किं
कल्पं स्थितं तनुभृता तनुभिस्ततः किम् ॥
जीर्णा कन्था ततः किं सितममलपटं पट्टसूत्रं ततः किं
एका भार्या ततः किं हयकरिसुगणैरावृतो वा ततः किं ।
भक्तं भुक्तं ततः किं कदशनमथवा वासरान्ते ततः किं
व्यक्तं ज्योतिर्नवान्तर्मथितभवभयं वैभवं वा ततः किम् ॥
आदित्यस्य गतागतैरहरहः संक्षीयते जीवनं
व्यापारैर्बहुकार्यभारगुरुभिः कालो न विज्ञायते ।
दृष्ट्वा जन्मजराविपत्तिमरणं त्रासश्च नोत्पद्यते
पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत् ॥

तज्ज्ञानं प्रशमकरं यदिन्द्रियाणां तज्ज्ञेयं यदुपनिषत्सु निश्चितार्थम् ।
ते धन्या भुवि परमार्थनिश्चितेहाः शेषास्तु भ्रमनिलये परिभ्रमन्ति ॥

आत्मानात्मविवेको नो देहस्य च नाशिताज्ञानम् ।
एवं सति स्वमायुः प्राज्ञैरपि नीयते मिथ्या ॥

यावत्स्वस्थमिदं कलेवर गृहं यावच्च दूरे जरा
यावच्चेन्द्रियशक्तिरप्रतिहता यावत्क्षयो नायुषः ।
आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महान्
प्रोद्दीप्ते भवने तु कूपखननं प्रत्युद्यमः कीदृशः ॥
श्रेयः प्रेयश्च लोके द्विविधमभिहितं काम्यमात्यन्तिकं च
काम्यं दुःखैकमूलं क्षणलवविरसं तच्चिकीर्षन्ति मन्दाः ।
ब्रह्मैवात्यन्तिकं यन्निरतिशयसुखस्यास्पदं संश्रयन्ते
तत्त्वज्ञास्तच्चकाठोपनिषदभिहितं षड्विधायां च वल्ल्याम् ॥

———

## ❀ मुक्तिसूक्तयः ❀

ऋते ज्ञानान्न मुक्तिः । ज्ञानादेव तु कैवल्यम् । तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय । ज्ञात्वा देवं सर्वपाशापहानिः ।

श्रुतीनामयमुद्घोषः सत्यमेव न संशयः ।
परं तु द्विविधं ज्ञानं सविकल्पमविकल्पकम् ॥
भुक्तये सविकल्पं च मुक्तये निर्विकल्पकम् ।
ज्ञानं तु निर्विकल्पं हि चाज्ञानं सविकल्पकम् ॥
जिह्वाग्रवर्ति यज्ज्ञानं तत्सविकल्पमुदीरितम् ।
यथोक्तं शङ्कराचार्यैराचार्यप्रवरैः शृणु—

कुशला ब्रह्मवार्तायां वृत्तिहीनाः सुरागिणः ।
ते ह्यज्ञानितमा नूनं पुनरायान्ति यान्ति च ॥
वाग्वैखरी शब्दझरी शास्त्रव्याख्यानकौशलम् ।
वैदुष्यं विदुषां तद्वद् भुक्तये न तु मुक्तये ॥
न गच्छति विना पानं व्याधिरौषधशब्दतः ।
विना परोक्षानुभवं ब्रह्मशब्दैर्न मुच्यते ॥

यथा:—

अकृत्वा शत्रुसंहारमगत्वाखिल भूश्रियम् ।
राजाहमिति शब्दान्नो राजा भवितुमर्हति ॥

तथैव:—

अकृत्वा दृश्यविलयमज्ञात्वा तत्त्वमात्मनः ।
बाह्यशब्दैः कुतो मुक्तिरुक्तिमात्रफलैर्नृणाम् ॥

अतएवः—

समाहिता ये प्रविलाप्य बाह्यं
श्रोत्रादिचेतः स्वमहं चिदात्मनि ।
त एव मुक्ता भवपाशबन्धै-
र्नात्येतु पारोक्ष्यकथाभिधायिनः ॥

एतत्सविकल्पकं ज्ञानं भुक्तिदं न तु मुक्तिदम् ।
मोक्षोपयोगि किं ज्ञानं तत्समासेन श्रूयताम् ॥

उपाधिरायाति स एव गच्छति
स एव कर्माणि करोति भुङ्क्ते ।
स एव जीर्यन्म्रियते सदाहं
कुलाद्रिवन्निश्चल एव संस्थितः ॥

उपाधिविलयाद्विष्णौ निर्विशेषं विशेन्मुनिः ।
जलं जले वियद्व्योम्नि तेजस्तेजसि वा यथा ॥

घटे नष्टे यथा व्योम व्योमैव भवति स्फुटम् ।
तथैवोपाधिविलये ब्रह्मैव ब्रह्मवित्तमः ॥

उपाधिभेदात्स्वयमेव भिद्यते
चोपाध्यपोहे स्वयमेव केवलः ।
तस्मादुपाधेर्विलयाय विद्वान्
वसेत्सदाकल्पसमाधिनिष्ठया ॥

निर्विकल्पकसमाधिना स्फुटं
ब्रह्मतत्त्वमवगम्यते ध्रुवम् ।

अन्यथा चलितया मनोगतेः
प्रत्ययान्तरविमिश्रितं भवति ।।

सर्वधर्मान्परित्यज्य निर्ममो निरहङ्कारो भूत्वा ब्रह्मिष्ठं शरणमुपगम्य अहं ब्रह्मास्मि तत्त्वमसि सर्वं खल्विदं ब्रह्म नेह नानास्ति किंचनेत्यादिमहावाक्यार्थानुभवज्ञानाद्ब्रह्मैवाहमस्मीति निश्चित्य निर्विकल्पसमाधिना स्वतन्त्रो यतिश्चरति स संन्यासी स योगी स गुरुः स पूज्यः सोऽवधूतः स ब्राह्मण इति ।

अज्ञानहृदयग्रन्थेर्निःशेषविलयस्तदा ।
समाधिनाविकल्पेन यदाद्वैतात्मदर्शनम् ।।

मोक्षस्य हेतुः प्रथमो निगद्यते
वैराग्यमत्यन्तमनित्यवस्तुषु ।
ततः शमश्चापि दमस्तितिक्षा
न्यासः प्रशस्ताखिलकर्मणांभृशम् ।।
ततः श्रुतिस्तन्मननं सतत्त्व
ध्यानं चिरं नित्यनिरन्तरं मुनेः ।
ततोऽविकल्पं परमेत्य विद्वा-
निहैव निर्वाणसुखं समृच्छति ।।
विश्वं यदेतत्परमात्मदर्शनम्
विलापयेदात्मनि सर्वकारणे ।

पूर्णश्चिदानन्दमयोऽवतिष्ठते
न वेद बाह्यं न च वेद चान्तरम् ॥
यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।
बुद्धिश्च नो विचेष्टते तामाहुः परमां गतिम् ॥
पूर्णात्पूर्णतरे परात्परतरेऽप्यज्ञातपारे हरौ
संवित्स्फारसुधार्णवे विरहिते वीचीतरङ्गादिभिः ।
भास्वत्कोटिविकासताज्ज्वलदिगाकाशप्रकाशे परे
स्वानन्दैकरसे निमग्नमनसां न त्वं न चाहं जगत् ॥
पिंडीभूतं यदन्तर्जलनिधिसलिलं याति तत्सैन्धवाख्यं
भूयः प्रक्षिप्तमस्मिन्विलयमुपगतं नामरूपे जहाति ।
तद्वत्प्राज्ञः परात्मन्यथ भजति लयं तस्य चेतो हिमांशौ
वागग्नौ चक्षुरर्के पयसि पुनरस्टग्रेतसीदिक्षुकर्णौ ॥

यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा । यो वै भूमा तत्सुखम् ॥

शनैः शनैरुपरमेद्बुद्धया धृतिगृहीतया ।
आत्म संस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ॥
नैव धर्मी न चाधर्मी न चैव हि शुभाशुभी ।
यः स्यादेकासने लीनस्तूस्णीं किंचिदचिंतयन् ॥
सर्वव्यापारमुत्सृज्य अहं ब्रह्मेति चिन्तयेत् ।
अहं ब्रह्मेति निश्चित्य अहं भावं परित्यज ॥
येन दृष्टं परं ब्रह्म सोऽहं ब्रह्मेति चिन्तयेत् ।

किं चिन्तयति निश्चिन्तो द्वितीयं यो न पश्यति ॥
हरो यद्युपदेष्टा ते हरिः कमलजोऽपि वा ।
तथापि न तव स्वास्थ्यं सर्वं विस्मरणादृते ॥

कुलं पवित्रं जननी कृतार्था
वसुन्धरा पुण्यवती च तेन ।
अपारसंवित्सुखसागरेऽस्मिन्
लीनं परे ब्रह्मणि यस्य चेतः ॥

यत्सौख्याम्बुधिलेशलेशत इमे ब्रह्मादयो निर्वृता
यं चित्तं नितरां प्रशान्तकलने लब्ध्वा मुनिर्निर्वृतः ।
यस्मिन्नित्यसुखाम्बुधौ गलितधीर्ब्रह्मैव न ब्रह्मविद्यः
कश्चित्स सुरेन्द्रवन्दितपदो नूनं मनीषा मम ॥

यदा न लीयते चित्तं न च विक्षिप्यते पुनः ।
अनिंगतमनाभासं निष्पन्नं ब्रह्म तत्तदा ॥
ब्रह्मैवाहं चिदेवाहमेवं वापि न चिन्त्यते ।
चिन्मात्रेण यस्तिष्ठेद्वै देही मुक्त एव सः ॥

वैराग्यबोधौ पुरुषस्य पक्षिवत्पक्षौ
विजानीहि विचक्षण त्वम् ।
विमुक्तिसौधाग्रतलाधिरोहणं
ताभ्यां विना नान्यतरेण सिद्ध्यति ॥

अत्यन्त वैराग्यवतः समाधिः
समाहितस्यैव दृढप्रबोधः ।

नबुद्धतत्वस्य हि बन्धमुक्ति-
र्मुक्तात्मनो नित्यसुखानुभूतिः ॥
यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥
मुंजादिषीकामिव दृश्यवर्गात्-
प्रत्यञ्चमात्मानमखंडमक्रियम् ।
विविच्य तत्र प्रविलाप्य सर्वं
तदात्मना तिष्ठति यः स मुक्तः ॥
गुरुचरणाम्बुजनिर्भरभक्तः
संसारादचिराद्भव मुक्तः ।
सेन्द्रियमानसनियमादेवं
दृक्ष्यसि निजहृदयस्थं देवम् ॥
नित्यं जाग्रदवस्थायां सुप्तवद्योऽवतिष्ठते ।
तापत्रयविनिर्मुक्तं जीवन्मुक्तं नमाम्यहम् ॥
किं वेदैः स्मृतिभिः पुराणपठनैः शास्त्रैर्महाविस्तरैः
स्वर्गग्रामकुटीनिवासफलदैः कर्मक्रियाविभ्रमैः ।
त्यक्त्वैकं भवबन्धदुःखरचना विध्वंसि कालानलं
स्वात्मानन्दपदप्रवेशकलनं शेषा वणिग्वृत्तयः ॥
नाकृतेन कृतेनार्थो न श्रुतिस्मृतिविभ्रमैः ।
निर्मंत्थन इवाम्भोधिः स तिष्ठति यथास्थितः ॥
विविक्त आसीन उपारतेन्द्रियो
विनिर्जितात्मा विमलान्तराशयः ।

विभावयेदेकमनन्यसाधनो
विज्ञानदृक्केवल आत्मसंस्थितः ॥
एकान्ते सुखमास्यतां परतरे चेतः समाधीयतां
पूर्णात्मा सुसमीक्ष्यतां जगदिदं तद्बाधितं दृश्यताम् ।
प्राक्कर्म प्रविलाप्यतां चितिबलान्नाप्युत्तरैःश्लिष्यतां
प्रारब्धं त्विह भुज्यतामथपरं ब्रह्मात्मना स्थीयतां ॥
ज्ञानं वदन्तीह विमोक्षकारणं
तज्जायते नैव विलोलचेतसि ।
लौल्यं न योगेन विना प्रशाम्यति
तस्मात्तदर्थं हि यतेत साधकः ॥

योगश्चित्तवृत्तिनिरोधः

एकान्तस्थितिरिन्द्रियोपरमणे हेतुर्दमश्चेतसः
संरोधे करणं शमेन विलयं यायादहंवासना ।
तेनानन्दरसानुभूतिरचला ब्राह्मी सदा योगिनां
तस्माच्चित्तनिरोध एव सततं कार्यः प्रयत्नान्मुनेः ॥
इत्युक्तं निर्विकल्पं हि ज्ञानं मुक्तिप्रदायकम् ।
विद्वन्विषयमेवैतच्छृणु शब्दान्तरेण च ॥
मुक्ताभिमानी मुक्तो हि बद्धो बद्धाभिमान्यपि ।
किंवदन्तीह सत्येयं या मतिः सा गतिर्भवेत् ॥
इत्युक्तं हि स्वगीतायामष्टावक्रमहर्षिणा ।
अन्तकाले च मामेव स्मरन्मुक्त्वा कलेवरम् ।
यः प्रयाति स मद्भावं याति नास्त्यत्रसंशयः ॥

यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥

श्रीकृष्णेनापि प्रोक्तं च गीतायां स्पष्टमेव हि ।
एतेषां सुप्रमाणानां तात्पर्यमिदमुच्यते–

सति मनसि मननं ध्रुवं मनने ध्रुवे गमनं ध्रुवम् ।
मनस्यसति मननं हि नो यदि अमननं गमनं कुतः ॥

यावज्जीवति मनः शत्रुस्तावज्जीर्णं शरीरकम् ।
अवश्यमेव संयाति त्यक्त्वा देहान्तरं प्रति ॥

देहान्तरेमवाप्नोति मन एव शरीरतः ।
कथं देहान्तरप्राप्तिर्मनोनाशे भविष्यति ॥

तस्मान्मनो नाशय सप्रयत्न नाशोऽस्य मुक्तिः कथिता मुनीन्द्रैः ।
अत्र प्रमाणानि बहूनि सन्ति वै शृणुष्व तावत्कतिपय समाहितः—

नायाति प्रत्यगात्मा प्रजननसमये नैव यात्यन्तकाले
यत्सोऽखण्डोऽस्ति लैङ्गं मन इह विशतिप्रव्रजत्यूर्ध्वमर्वाक् ।
तत्कार्श्यं स्थूलतां वा न भजति वपुषः किन्तु संस्कारजाते
तेजो मात्रा गृहीत्वा व्रजति पुनरिहायाति तैस्तैःसहैव ॥

नह्यस्त्यविद्या मनसोऽतिरिक्ता
मनो ह्यविद्या भवबन्धहेतुः ।
तस्मिन्विनष्टे सकलं विनष्टं
विजृम्भितेऽस्मिन्सकलं विजृम्भते ॥

कस्यास्ति नाशे मनसो हि मोक्षः
क्व सर्वथा नास्ति भयं विमुक्तौ ।
शल्यं किमेकं निजमूर्खतैव
के के ह्युपास्या गुरुदेववृद्धाः ॥

यतो निर्विषयस्यास्य मनसो मुक्तिरिष्यते ।
अतो निर्विषयं नित्यं मनः कार्यं मुमुक्षुणा ॥
मन एव हि संसारस्तत्प्रयत्नेन शोधयेत् ।
दृश्यं ह्यदृश्यतां नीत्वा ब्रह्माकारेण चिन्तयेत् ॥
ज्ञेयवस्तुपरित्यागे विलयं याति मानसम् ।
मानसे विलयं याते स्वरूपमवशिष्यते ॥
अभ्यासेन परिस्पन्दे प्राणानां क्षयमागते ।
मनः प्रशममायाति निर्वाणमवशिष्यते ॥
संकल्पमनसी भिन्ने न कदाचित् केनचित् ।
संकल्पजाते गलिते कैवल्यमवशिष्यते ॥
यतो वाचो निवर्तन्ते विकल्पकलनान्विताः ।
संकल्पसंक्षयाज्जन्तोः पदं तदवशिष्यते ॥
नातः परतरः कश्चिन्निश्चयोस्त्यपरो मुने ।
स्वयमेव त्वया ज्ञातं गुरुणा च पुनः श्रुतम् ॥
अव्युच्छिन्नश्चिदात्मैकः प्रमानस्तीह नेतरत् ।
स्वसंकल्पवशाद् बद्धो निः संकल्पस्तु मुच्यते ॥

यत एवमतः

मा संकल्पविकल्पाभ्यां चित्तं क्षोभय चिन्मय ।
उपशाम्य सुखमातिष्ठ स्वात्मन्यानन्दविग्रहे ॥

संकल्पसंक्षयवशाद्गलिते तु चित्ते
संसारमोहमिहिका गलिता भवन्ति ।

स्वच्छं विभाति शरदीव खमागतायां
चिन्मात्रमेकमजमाद्यमनन्तमन्तः ॥

अथाकामयमानो योऽकामो निष्काम आत्मकाम आप्तकामो न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते ब्रह्मैव सन्ब्रह्माप्येति ।

प्रायोऽकामोऽस्तकामो निरतिशयसुखायात्मकामस्तदासौ तत्प्राप्तावाप्तकामःस्थितश्चरमदशस्तस्य देहावसाने प्राणां नैवोत्क्रमन्ति क्रमविरतिमिताः स्वस्वहेतौ तदानीं कायं जीवो विलीनो लवणमिव जलेऽखण्ड आत्मैव पश्चात् ।

विहाय कामान्यः सर्वान्पुमांश्चरति निःस्पृहः ।
निर्ममो निरहङ्कारः स शान्तिमधिगच्छति ॥
यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥
यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः ।
अथ मर्त्योऽमृतो भवत्येतावदनुशासनम् ॥
तदा मुक्तिर्यदा चित्तं न शोचति न कांक्षति ।
न मुञ्चति न गृह्णाति न हृष्यति न कुप्यति ॥
न नैष्कर्म्येण तस्यार्थो न तस्यार्थोऽस्ति कर्मभिः ।
न समाधानजाप्याभ्यां यस्य निर्वासनं मनः ॥
तदा बन्धो यदा चित्तं सक्तं कास्वपि दृष्टिषु ।

तदा मुक्तिर्यदा चित्तमसक्तं सर्वदृष्टिषु ॥
यदा नाहं तदा मुक्तिर्यदाहं बन्धनस्तदा ।
मत्वेति हेलया किंचिन्मा गृहाण विमुञ्च मा ॥
निरस्तविषयासङ्गं संनिरुद्धं मनो हृदि ।
यदा यात्युन्मनीभावं तदा तत्परमं पदम् ॥
तावदेव निरोद्धव्यं यावद्धृदि गतं क्षयम् ।
एतज्ज्ञानं च ध्यानं च शेषो न्यायस्य विस्तरः ॥
त्यजैव ध्यानं सर्वत्र मा किंचिद्धृदि धारय ।
आत्मा त्वं मुक्त एवासि किं विमृश्य करिष्यसि ॥
प्रलयस्यापि हुङ्कारैश्चलाचल विचालकैः ।
विक्षोभं नैति यस्यात्मा स महात्मा निगद्यते ॥

न खिद्यते नो विषयैः प्रमोदते
न सज्जते नापि विरज्यते च ।
स्वस्मिन्सदा क्रीडति नन्दति स्वयं
निरन्तरानन्दरसेन तृप्तः ॥

कंचित्कालं स्थितः कौ पुनरिह भजते नैव देहादिसंघं
यावत्प्रारब्धभोगं कथमपि ससुखं चेष्टतेऽसङ्गबुद्ध्या ।
निर्द्वन्द्वो नित्यमुक्तो विगलितममताहंकृतिर्नित्यतृप्तो
ब्रह्मानन्द स्वरूपः स्थिरमतिरचलो निर्गताशेषमोहः ॥
निमेषार्द्धं न तिष्ठन्ति वृत्तिं ब्रह्ममयीं विना ।
यथा तिष्ठन्ति ब्रह्माद्याः सनकाद्याः शुकादयः ॥
एषा ब्राह्मी स्थितिस्तात नैनां प्राप्य विमुह्यति ।
स्थित्वास्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥

# ❀ अद्वैतम् ❀

श्लोकार्द्धेन प्रवक्ष्यामि यदुक्तं ग्रन्थकोटिभिः ।
ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः ॥
वेदान्तसिद्धान्तनिरुक्तिरेषा ब्रह्मैव जीवः सकलं जगच्च ।
अखण्डरूपस्थितिरेव मोक्षो ब्रह्माद्वितीये श्रुतयः प्रमाणम् ॥
सर्वं खल्विदं ब्रह्म नेह नानास्ति किञ्चन ।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥

ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चात् ब्रह्म दक्षिणतश्चोत्तरेण ।
अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम् ॥

तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्मम् । तदादेश । अहंकारादेश । आत्मादेश । सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् । ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत् ।

अव्यावृत्ताननुगतं वस्तु ब्रह्मेति भण्यते ।
ब्रह्मार्थो दुर्लभोऽन्नस्याद् द्वितीये सति वस्तुनि ॥
देशतः कालतो वस्तुतः परिच्छेदशून्यं ब्रह्म ।
नान्यत्किञ्चनमिषत् ॥
यदद्वैतं श्रुतं सृष्टेः प्राक्तदेवाद्यचोपरिः ।
मुक्तावपि वृथा माया भ्रामयत्यखिलाञ्जनान् ॥
मायाख्यायाः कामधेनोर्वत्सौ जीवेश्वरावुभौ ।
यथेच्छं पिबतां द्वैतं तत्त्वं त्वद्वैतमेव हि ॥
सदिदं परमाद्वैतं स्वस्मादन्यस्य वस्तुनोऽभावात् ।
न ह्यन्यदस्ति किंचित्सम्यक्परमार्थतत्त्वबोधे हि ॥
स्वयं ब्रह्मा स्वयं विष्णुः स्वयमिन्द्रः स्वयं शिवः ।
स्वयं विश्वमिदं सर्वं स्वस्मादन्यन्न किंचन ॥
आसमस्मि भविष्यामि नासीदस्ति भविष्यति ।
मत्तोऽन्यदिति मत्वायं स्वे महिम्नि महीयते ॥

किं करोमि क्व गच्छामि किं गृह्णामि त्यजामि किम् ।
यन्मया पूरितं सर्वं महाकल्पाम्बुना यथा ॥
मनोदृश्यमिदं द्वैतं यत्किंचित्सचराचरम् ।
मनसो ह्यमनीभावे द्वैतं नैवोपलभ्यते ॥
यावदज्ञानकलना यावन्न ब्रह्मभावना ।
यावदास्था जगज्जाले तावच्चित्तादिकल्पना ॥
पाषाणवृक्षतृणधान्यकटाम्बराद्या दग्धा भवन्ति हि मृदेव यथा तथैव ।
देहेन्द्रियासुमनआदिसमस्तदृश्यं ज्ञानाग्निदग्धमुपयाति परात्मभावम् ॥
सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि ।
नाविद्यास्तीह नो माया सर्वं ब्रह्मेदमक्लमम् ॥

अतोऽन्यदार्तम् । क्षीरान्तर्यद्वदाज्यं मधुरिमविदितं तत्पृथग्भूत-
मस्माद्भूतेषु ब्रह्म तद्वद् व्यवहृतिविदितं श्रान्तविश्रान्तिबीजम् ।
यं लब्ध्वा लाभमन्यं तृणमिव मनुते यत्र नोदेति भीतिः सान्द्रानन्दं
यदन्तः स्फुरति तदमृतं विद्ध्यतो ह्यन्यदार्तम् । सर्वं ह्येतद्ब्रह्म ॥

स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट् ।
स एव विष्णुः स प्राणः स कालोऽग्निः स चन्द्रमाः ॥

यस्मात्परं नापरमस्ति किंचिद्यस्मान्नाणीयो न ज्यायोऽस्तिकश्चित् ।
वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥

जगद्विलक्षणं ब्रह्म ब्रह्मणोऽन्यन्न किंचन ।
ब्रह्मान्यद्भाति चेन्मिथ्या यथा मरुमरीचिका ॥
तावद्विभाति संसारः शुक्तिका रजतं यथा ।
यावन्न ज्ञायते ब्रह्म सर्वाधिष्ठानमव्ययम् ॥

अचिच्चेतनग्रन्थिसत्तास्ति यावद्विभातीह तावत्समस्तप्रपञ्चः ।
यदा वै भवत्यस्य निःशेषनाशस्तदा ब्रह्मणोऽन्यत्क्वचिन्नास्ति किंचित् ॥

आत्मतत्त्वातिरेकेण यत्किंचिद्व्यपदिश्यते ।
तत्सर्वं सर्वथालीकं खपुष्पान्नातिरिच्यते ॥

इदं प्रपञ्चं यत्किंचिद् यद्यज्जगति विद्यते ।
दृश्यरूपं च दृग्रूपं सर्वं शशविषाणवत् ॥

---

## ❀ देहेऽस्मिन्पुरुषः परः ❀

उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः ।
परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः ॥
अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः ।
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥
सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च ।
वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ॥
ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥
मत्तः परतरं नान्यत्किंचिदस्ति धनंजय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥
अंगुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सनिविष्टः ।
तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिषीकामिव धैर्येण तं विद्याच्छुक्रममृतमिति ॥
तदेजति तन्नैजति तद्दूरे तद्वन्तिके ।
तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ॥
एको देवः सर्वभूतेषु गूढः साक्षी चेता केवलो निर्गुणश्च ।
योऽयं विज्ञानमयः पुरुषः प्राणेषु हृद्यन्तर्ज्योतिः ॥
बुद्धौ गुहायां सदसद्विलक्षणं ब्रह्मास्ति सत्यं परमद्वितीयम् ।
तदात्मना योऽत्र वसेद्गुहायां पुनर्न तस्याङ्गगुहाप्रवेशः ॥
अत्रैव सत्त्वात्मनि धीगुहाया मव्याकृताकाश उरुप्रकाशः ।
आकाश उच्चै रविवत्प्रकाशते स्वतेजसा विश्वमिदं प्रकाशयन् ॥
प्रकृतिविकृतिभिन्नः शुद्धबोधस्वभावः सदसदिदमशेषं भासयन्निर्विशेषः ।
विलसति परमात्मा जाग्रदादिष्ववस्थास्वहमहमिति साक्षात्साक्षिरूपेण बुद्धेः ॥

यत्तदद्रेश्यमग्राह्यमवर्णमचक्षुः श्रोत्र तदपाणिपादम् ।
नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं तद्भूतयोनिं परिपश्यन्ति धीराः ॥

अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥

समस्तेषु वस्तुष्वनुष्यूतमेकं समस्तानि वस्तूनि यन्न स्पृशन्ति ।
वियद्वत्सदाशुद्धमच्छस्वरूपं स नित्योपलब्धिस्वरूपोऽहमात्मा ॥

---

## ❀ कर्म ❀

यावच्छरीरादिषु माययात्मधीस्तावद्विधेयो विधिवाद कर्मणाम् ।
नेतीति वाक्यैर्निखिलं निषिध्य तज् ज्ञात्वा परात्मानमथ त्यजेत्क्रियाः ॥

न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः ॥

न गृह्यते चक्षुषा नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा ।
ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः ॥

कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते ।
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥

ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः ।
नैवास्ति किंचित्कर्तव्यमस्ति चेन्न स तत्त्ववित् ॥

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥

कृतं न कति जन्मानि कायेन मनसा गिरा ।
दुःखमायासदं कर्म तदद्याप्युपरम्यताम् ॥

चित्तस्य शुद्धये कर्म न तु वस्तूपलब्धये ।
वस्तुलब्धिर्विचारेण न किंचित्कर्म कोटिभिः ॥

कर्माणि चित्तशुद्ध्यर्थमैकाग्रपार्थमुपासना ।
मोक्षार्थं ब्रह्मविज्ञानमिति वेदान्तनिश्चयः ॥

वदन्तु शास्त्राणि यजन्तु देवताः कुर्वन्तु कर्माणि भजन्तु देवाः
आत्मैक्यबोधेन विनापि मुक्तिर्न सिद्ध्यति जन्म शतान्तरेऽपि ।

कुरुते गङ्गासागरगमनं व्रतपरिपालनमथवा दानम् ।
ज्ञानविहीने सर्वमतेन न भवति मुक्तिर्जन्मशतेन ।।
प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म ।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापि यन्ति ।।

परीक्ष्य लोकान्कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन ।
तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ।।

इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः ।
नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरं वा विशन्ति ।।

बोधोऽन्यसाधनेभ्यो हि साक्षान्मोक्षैकसाधनम् ।
पाकस्य वह्निवज्ज्ञानं विना मोक्षो न सिद्ध्यति ।।

अविरोधितया कर्म नाविद्यां विनिवर्तयेत् ।
विद्याविद्यां निहन्त्येव तेजस्तिमिरसंघवत् ।।
निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।
शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ।।

क्रिया शरीरोद्भवहेतुरादृता प्रियाप्रियौ तौ भवतः सुरागिणः ।
धर्मेतरौ तत्र पुनः शरीरकं पुनः क्रिया चक्रवदीर्यते भवः ।।
नाज्ञानहानिर्न च रागसंक्षयो भवेत्ततः कर्म सदोषमुद्भवेत् ।
ततः पुनः संसृतिरप्यवारिता तस्माद्बुधो ज्ञानविचारवान्भवेत् ।।

सा तैत्तिरीयश्रुतिराह सादरं न्यासं प्रशस्ताखिलकर्मणां स्फुटम् ।
एतावदित्याह च वाजिनां श्रुतिर्ज्ञानं विमोक्षाय न कर्म साधनम् ।।

तस्मात्त्यजेत् कार्यमशेषतः सुधीर्विद्याविरोधान्न समुच्चयो
भवेत् आत्मानुसन्धानपरायणः सदा निवृत्तसर्वेन्द्रियवृत्तिगोचरः ।

निर्विण्णानां ज्ञानयोगः कर्मयोगस्तु कामिनाम् ।
न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः ।।

———

## ❋ शास्त्राधीतिः ❋

अविज्ञाते परे तत्त्वे शास्त्राधीतिस्तु निष्फला ।
विज्ञातेऽपि परे तत्त्वे शास्त्राधीतिस्तु निष्फला ॥
शब्दजालं महारण्यं चित्त भ्रमणकारकम् ।
अतः प्रयत्नाज्ज्ञातव्यं तत्त्वज्ञात्तत्त्वमात्मनः ॥

नानुध्यायाद्बहूञ्छब्दान्वाचो विग्लापनं हि तत् ।
विहाय शास्त्र जालानि यत्सत्यं तदुपास्यताम् ॥
पठन्ति चतुरो वेदान्धर्मशास्त्राण्यनेकशः ।
आत्मानं नैव जानन्ति दर्वी पाकरसं यथा ॥
श्रुतिस्मृतीतिहासादिसूत्रभाष्यादिसद्गिराम् ।
ततोऽपामात्मनीवाब्धौ विभ्रो विश्रान्तिमद्वये ॥
वेदैरशेषैरहमेववेद्यो वेदान्तकृद्वेदविदेव चाहम् ।
न पुण्यपापे मयि नापि नाशो न जन्म देहेन्द्रियबुद्धयश्च ॥

---

## ❋ शरीरम् ❋

त्वङ्मांसमेदास्थिपुरीषराशावहंमतिं मूढजनः करोति ।
विलक्षणं वेत्ति विचारशीलो निजस्वरूपं परमार्थभूतम् ॥
मांससृक्पूयविण्मूत्रस्नायुमज्जास्थिसंहतौ ।
देहे चेत्प्रीतिमान्मूढो भविता नरकेऽपि सा ॥
भगवन्नस्थिचर्मस्नायुमज्जामांसशुक्रशोणितश्लेष्माश्रुदूषिकादूषिते
विण्मूत्रवातपित्तसंघाते दुर्गन्ध निःसारेऽस्मिन्शरीरे किं कामोपभोगैः ।

मातापित्रोर्मलोद्भूतं मलमांसमयं वपुः ।
त्यक्त्वा चाण्डालवद्दूरं ब्रह्मीभूय कृती भव ॥
छायेव पुंसः परिदृश्यमानमाभासरूपेण फलानुभूत्या ।
शरीरमाराच्छववन्निरस्तं पुनर्न संधत्त इदं महात्मा ॥

देहेन्द्रियादावसति भ्रमोदितां विद्वानहन्तां न जहाति यावत् ।
तावन्न तस्यास्ति विमुक्तिवार्ताप्यस्त्वेष वेदान्तनयान्तदर्शी ।।

शरीरपोषणार्थी सन्य आत्मानं दिदृक्षति ।
ग्राहं दारुधिया धृत्वा नदीं तर्तुं स गच्छति ।।

नाहं देहो न मे देहो जीवो नाहमहं हि चित् ।
अयमेव हि मे बन्ध आसीद्या जीविते स्पृहा ।।

देहाभिमानपाशेन चिरं बद्धोऽसि पुत्रक ।
बोधोऽहं ज्ञानखड्गेन तन्निष्कृत्य सुखी भव ।।

सशरीरमहो विश्वं परित्यज्य मयाधुना ।
कुतश्चित्कौशलादेव परमात्मा विलोक्यते ।।

यस्याभिमानो मोक्षेऽपि देहेऽपि ममता तथा ।
न स ज्ञानी न वा योगी केवलं दुःखभागसौ ।।

प्रारब्धसूत्रग्रथितं शरीरं प्रयातु वा तिष्ठतु गोरिवस्रक् न तत्पुनः पश्यति तत्त्ववेत्तानन्दात्मनि ब्रह्मणि लीनवृत्तिः ।

इदं शरीरं शतखण्डजर्जरं पतत्यवश्यं हरिनाम दुर्लभम् ।
किमौषधं पृच्छसि मूढ दुर्मते निरामयं रामरसायनं पिब ।।

---

# ❋ प्रकीर्णकपद्यानि ❋

यो विलंघ्याश्रमान्वर्णानात्मन्येव स्थितः पुमान् ।
अतिवर्णाश्रमी योगी अवधूतः स उच्यते ।।

आत्मा वारे दृष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्च ।।

यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः ।
तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः ।।

दिग्देशकालाद्यनपेक्ष्यसर्वगं शीतादिहृन्नित्यसुखं निरञ्जनम् ।
यः स्वात्मतीर्थं भजते विनिष्क्रियः स सर्ववित्सर्वगतोऽमृतो भवेत् ।।

नियमितमनसामुं त्वं स्वमात्मानमात्म-
न्ययमहमिति साक्षाद्विद्धि बुद्धिप्रसादात् ।
जनिमरणतरङ्गापारसंसारसिन्धुं
प्रतर भव कृतार्थो ब्रह्मरूपेण संस्थः ॥
उपाधिस्थोऽपि तद्धर्मैर्न लिप्तो व्योमवन्मुनिः ।
संदिग्धः सर्वभूतानां वर्णाश्रमविवर्जितः ॥
अन्धवज्जडवच्चैव मूकवच्च महीं चरेत् ।

स तज्ज्ञो बालोन्मत्तपिशाचवज्जडवृत्त्या लोकमाचरेत् । दृष्टः साक्षादिदानीमिह खलु जगतामीश्वरः संविदात्मा विज्ञातः स्थाणुरेको गगनवद्द्भितः सर्वभूतान्तरात्मा । दृष्टं ब्रह्मातिरिक्तं सकलमिदमसद्रूप-माभासमात्रं शुद्धं ब्रह्माहमस्मीत्यविरतमधुनात्रैव तिष्ठेदनीहः ॥

एकस्तत्रास्त्यसङ्गस्तदनु तदपरोऽज्ञानसिन्धुं प्रविष्टो विस्मृत्या-त्मस्वरूपं स विविधजगदाकारमाभासमैक्षत् । बुद्धयान्तर्यविदैक्षद्विसृजति तमजा सोऽपि तामेवमेकस्तावद्विप्रास्तभेकं कथमपि बहुधा कीर्तयन्ति स्ववाग्भिः ॥

एको निष्कम्प आत्मा प्रचलति मनसा धावमानेन तस्मिंस्तिष्ठ-त्यग्रेऽथ पश्चान्न हि तमनुगतं जानते चक्षुराद्याः । यद्वत्पाथस्तरङ्गैः प्रचलति परितो धावमानैस्तदन्तः प्राक् पश्चादस्ति तेषां पवनसमुदितै-स्तैः प्रशान्तैर्यथावत् ॥

घटोदके बिम्बितमर्कबिम्बमालोक्य मूढो रविरेव मन्यते ।
तथा चिदाभासमुपाधि संस्थं भ्रान्त्याहमित्येव जडोऽभिमन्यते ॥
घटं जलं तद्गतमर्कबिम्बं विहाय सर्वं विनिरीक्ष्यतेऽर्कः ।
तटस्थ एतत्त्रितयावभासकः स्वयंप्रकाशो विदुषा यथा तथा ॥
देहं धियं तत्प्रतिबिम्बमेतं विसृज्य बुद्धौ निहितं गुहायाम् ।
द्रष्टारमात्मानमखण्डरूपं स्वयं प्रकाशं सदसद्विलक्षणम् ॥
नित्यं विभुं सर्वगतं सुसूक्ष्ममन्तर्बहिः शून्यमनन्यमात्मन ।

विज्ञाय सम्यङ् निजरूपमेतत्पुमान्विपाप्मा विरजो विमृत्युः ।।
विशोक आनन्दघनो विपश्चित् स्वयं कुतश्चिन्न बिभेति कश्चित् ।
नान्योऽस्ति पन्था भवबन्धमुक्तेर्विना स्वतत्त्वावगमं मुमुक्षोः ।।

देवार्चनस्नानशौचभिक्षादौ वर्ततां वपुः ।
तारं जपतु वाक्तद्वत्पठत्वाम्नाय मस्तकम् ।।
विष्णुं ध्यायतु धीर्यद्वा ब्रह्मानन्दे विलीयताम् ।
साक्ष्यहं किंचिदप्यत्र न कुर्वे नैव कारये ।।
हर्षशोकभयक्रोधलोभमोहस्पृहादयः ।
अहङ्कारस्य चैवैते जन्ममृत्युश्च नात्मनः ।।
रागेच्छासुखदुःखादि बुद्धौ सत्यां प्रवर्तते ।
सुषुप्तौ नास्ति तन्नाशे तस्माद्बुद्धेस्तु नात्मनः ।।

सदात्मनि ब्रह्मणि तिष्ठतो मुनेः पूर्णाद्वयानन्दमयात्मना सदा ।
न देशकालाद्युचितप्रतीक्षा त्वङ्मांसविट्पिण्डविसर्जनाय ।।

त्यजैव ध्यानं सर्वत्र मा किंचिद्धृदि धारय ।
आत्मा त्वं मुक्त एवासि किं विमृश्य करिष्यसि ।।
श्रद्धस्व तात श्रद्धस्व नात्र मोहं कुरुष्व भोः ।
ज्ञानस्वरूपो भगवानात्मा त्वं प्रकृते परः ।।
मोहं जहि महामृत्युं पुत्रदारगृहादिषु ।
यं त्यक्त्वा मुनयो यान्ति तद्विष्णोः परमं पदम् ।।
कुटुम्बपुत्र दाराश्च वेदाङ्गानि च सर्वशः ।
यज्ञं यज्ञोपवीतं च त्यक्त्वा गूढो यतिश्चरेत् ।।
अज्ञानकलुषं जीवं ज्ञानाभ्यासाद्धि निर्मलम् ।
कृत्वा ज्ञानं स्वयं नश्येज्जलं कतकरेणुवत् ।।

भ्रातर्यदीदं परिदृश्यते जगन्मायैव सर्वं परिहृत्य चेतसा ।
मद्भावनाभावितशुद्धमानसः सुखी भवानन्दमयो निरामयः ।।
नेतिप्रमाणेन निराकृताखिलो हृदा समास्वादितचिद्घनामृतः ।

त्यजेदशेषं जगदात्तसद्रसं पीत्वा यथाम्भ. प्रजहाति तत्फलम् ॥

भ्रान्तं देशमनेकदुर्गं विषमं प्राप्तं न किंचित्फलम्
त्यक्त्वा जातिकुलाभिमानमुचितं सेवा कृता निष्फला ।
भुक्तं मानविवर्जितं परगृहे साशंकया काकवत्
तृष्णे दुर्मति पापकर्मनिरते ताद्यापि सन्तुष्यसि ॥

उत्खातं निधिशंकया क्षितितलं ध्माता गिरेर्धतिवो निस्तीर्णः सरितापतिर्नृपतयो यत्नेन सन्तोषिताः । मन्त्राराधनतत्परेण मनसा नीता श्मशाने निशा प्राप्तः काणवराटकोऽपि न मया तृष्णेऽधुनामुंचमं ॥

भोगा न भुक्ता वयमेव भुक्तास्तपो न तप्तं वयमेव तप्ताः ।
कालो न यातो वयमेव यातास्तृष्णा न जीर्णा वयमेव जीर्णाः ॥

समाधिनिर्धूतमलस्य चेतसो निवेशितस्यात्मनियत्सुखं भवेत् ।
न शक्यते वर्णयितुं तदा गिरा स्वयं तदन्तः करणेन गृह्यते ॥

एवं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च लोकैषणायाश्च वित्तैषणायाश्च ससाधनेभ्यो व्युत्थाय भिक्षाचर्यं चरन्ति । ते देवाः पुत्रैषणायालोकैषणाया वित्तैषणाया व्युत्थाय निरागारा निष्परिग्रहा अशिखा अयज्ञोपवीता अन्धा बधिरा क्लीबा मूका उन्मत्ता इव परिवर्तमानाः शान्ता दान्ता उपरतास्तितिक्षवः प्रणयमेव शून्यमोङ्कारं जानन्तस्तत्रैव परिसमाप्ताः ।

यथा देहोऽहं मनुष्योऽहं ब्राह्मणोऽहं शूद्रोऽहमिति दृढनिश्चयस्तथा नाहं देहो न मनुष्यो न ब्राह्मणो न शूद्रः किंत्वसंगः सच्चिदानन्द-स्वरूपः सर्वान्तर्यामी स्वप्रकाशरूपोहमस्मीत्यपरोक्षज्ञानवाञ्जीवन्मुक्तः ॥

क्षोणीकोणशतांशपालनखलदुर्वाणवानिलक्षुभ्यत्क्षुद्र नरेन्द्रचाटु-रचनां धन्यां न मन्या महे । देवं सेवितुमेव निश्चिनुमहे योऽसौ दयालुः पुरा धानामुष्टिमुचे कुचेलमुनये धत्ते स्म वित्तेशताम् ॥

शय्या शैलशिला गृहं गिरिगुहा वस्त्रं तरूणां त्वचः
सारंगाःसुहृदो ननु क्षितिरुहां वृत्तिः फलैः कोमलैः ।
येषां निर्झरमम्बुपानमुचितं रत्येव विद्यांगना
मन्ये ते परमेश्वराः शिरसि यैर्बद्धो न सेवाञ्जलिः ॥

पराञ्चिखानि व्यतृणत्स्वयम्भूस्तस्मात्परां पश्यति नान्तरात्मन् ।
कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ॥

अतः परं ब्रह्म सदद्वितीयं विशुद्धविज्ञानघनं निरञ्जनम् ।
प्रशान्तमाद्यन्तविहीनमक्रियं निरन्तरानन्दरसस्वरूपम् ॥
निरस्तमायाकृतसर्वभेदं नित्यं परं निष्कलमप्रमेयम् ।
अरूपमव्यक्तमनाख्यमव्ययं ज्योतिः स्वयं किंचिदिदं चकास्ति ॥

अस्ति कश्चित्स्वयं नित्य अहंप्रत्ययलम्बनः ।
अवस्थात्रयसाक्षी सन्पञ्चकोषविलक्षणः ॥

ज्ञाता मनोऽहंकृतिविक्रियाणां देहेन्द्रियप्राणकृतक्रियाणाम् ।
अयोऽग्निवत्ताननुवर्तमानो न चेष्टते नो विकरोति किंचन ॥

न जायते नो म्रियते न वर्द्धते न क्षीयते नो विकरोति नित्यः
विलीयमानेऽपि वपुष्यमुष्मिन्न लीयते कुम्भ इवाम्बरः स्वयं स पर्य-
गाच्छुक्रमकायमव्रणमस्नायुर ठँ शुद्धमपापविद्धम् । कविर्मनीषी परिभूः
स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥

अजमपि जनियोगं प्रापदैश्वर्ययोगादगति च गतिमत्तां प्रापदेकं ह्यनेकम् ।
विविधविषयधर्मग्राहिमुग्धेक्षणानां प्रणतभयविहन्तृ ब्रह्म यत्तन्नतोऽस्मि ॥

अहिमिव जनयोगं सर्वदा वर्जयेद्यः कुणपमिव सुनारीं त्यक्तुकामो विरागी ।
विषमिव विषयान्यो मन्यमानः समन्ताज्जयति परमहंसो मुक्तिभावं समेति ॥

स्नातं तेन समस्ततीर्थसलिले दत्ता च सर्वावनिर्यज्ञानां च क्रतुः
सहस्रक्रतवो देवाश्च सम्पूजिताः । संसाराच्च समुद्धृताः स्वपितर-
स्त्रैलोक्यपूज्योऽप्यसौ यस्य ब्रह्मविचारणे क्षणमपि स्थैर्यं मनः प्राप्नुयात् ॥

योऽन्तः सुखोऽन्तरारामस्तथान्तर्ज्योतिरेव हि ।
स योगी ब्रह्मनिर्वाणमचिरेणाधिगच्छति ॥

अनादिमायया सुप्तो यदा जीवः प्रबुध्यते ।
अनिद्रमजमस्वप्नमद्वैतं बुध्यते तदा ॥

अजडात्मवदाभान्ति यत्सान्निध्याज्जडा अपि ।

देहेन्द्रियमनःप्राणाः सोऽहमित्यवधारय ॥
लोकवासनया चैव देहवासनया तथा ।
शास्त्रवासनया ज्ञानं यथावन्नैव जायते ॥
निद्राया लोकवार्तायाः शब्दादेरपि विस्मृतेः ।
क्वचिन्नावसरं दत्वा चिन्तयात्मानमात्मनि ॥

प्रज्ञानांशुप्रतानैः स्थिरचरनिकरव्यायिभिर्व्याप्य लोकान्भुक्त्वा भोगान्स्थविष्ठान्पुनरपि धिषणोद्भासितान्कामजन्यान् । पीत्वा सर्वान्विशेषान्स्वपिति मधुर भुङ्मायया भोजयन्तो मायासंख्यातुरीयं परममृतमयं ब्रह्म यत्तन्नतोऽस्मि ॥

नानाच्छिद्र घटोदरस्थितमहादीपप्रभाभास्वरं ज्ञानं यस्य तु चक्षुरादिकरण द्वारा बहिः स्पन्दते । जानामीति तमेव भान्तमनुभात्येतत्समस्तं जगत्तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥

क्रियान्तरासक्तिमपास्य कीटको ध्यायन्यथालिं ह्यलिभावमृच्छति ।
तथैव योगी परमात्मतत्त्वं ध्यात्वा समायाति तदेकनिष्ठया ॥
त्यजाभिमानं कुलगोत्रनामरूपाश्रमेष्वार्द्र शवाश्रितेषु ।
लिङ्गस्य धर्मानपि कर्तृतादींस्त्यक्त्वा भवाखण्डसुखस्वरूपः ॥
आत्मनो विक्रिया नास्ति बुद्धिर्बोधो न जात्वपि ।
जीवः सर्वमलं ज्ञात्वा कर्ता द्रष्टेति मुह्यति ॥
आत्मनः सच्चिदंशश्च बुद्धेर्वृत्तिरिति द्वयम् ।
संयोज्य चाविवेकेन जानामीति प्रवर्तते ॥
त्यज धर्ममधर्मं च उभे सत्यानृते त्यज ।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्त्यज ॥
संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया ।
प्रव्रजन्त्यकृतोद्वाहः परं वैराग्यमाश्रितः ॥
ब्रह्मानन्दनिधिर्महाबलवताहङ्कारघोराहिना
संवेष्टयात्मनि रक्ष्यते गुणमयैश्चराडैस्त्रिभिर्मस्तकैः ।
विज्ञानाख्यमहासिना द्युतिमता संछिद्य शीर्षत्रयं

निर्मूल्याहिमिमं निधिं सुखकरं धीरोऽनुभोक्तुं क्षमः ॥

अहंकर्तर्यस्मिन्नहमिति मतिं मुञ्च सहसा
विकारात्मन्यात्मप्रतिफलजुषि सस्थितिमुषि ।
यदध्यासात्प्राप्ता जनिमृतिजरादुःखबहुला
प्रतीचश्चिन्मूर्तेस्तवसुखतनोः संसृतिरियम् ॥

अज्ञान योगात्परमात्मनस्तव ह्यनात्मबन्धस्तत एव संसृतिः
तयोर्विवेकोदित बोधवह्निरज्ञानकार्यं प्रदहेत्समूलम् ।
यावन्न पश्येदखिलं मदात्मकं तावन्मदाराधनतत्परो भवेत् ।
श्रद्धालुरत्यूर्जितभक्तिलक्षणो यस्तस्य दृश्योऽहमहर्निशं हृदि ॥

निवृत्ता भोगेच्छा पुरुषबहुमानोऽवगलितः
समानाः स्वर्याताः समद्दि सुहृदोऽजीवितसमाः ।
शनैर्यष्टयोत्थानं घनतिमिररुद्धे च नयने
अहो धृष्टः कायस्तदपि मरणापाय चकितः ॥

भिक्षाशनं तदपि नीरसमेक वार शय्या च भूः परिजनो निजदेहमात्रम् ।
वस्त्रं च जीर्ण शतखण्डमलीन कन्था हा हा तथापि विषया न परित्यजन्ति॥

पातालमाविशसि यासि नभो विलंघ्य
दिङ्मण्डलं भ्रमसि मानस चापलेन ।
भ्रान्त्यापि जातु विमलं कथमात्मनीनं
न ब्रह्म संस्मरसि निर्वृतिमेषि येन ॥

अग्रे गीतं सरसकवयः पार्श्वतो दाक्षिणात्याः
पृष्ठे लीला वलय परिणतिश्चामरग्राहिणीनाम् ।
यद्यस्त्येवं भवसुखरसास्वादने लम्पपटत्वं
नो चेच्चेतः प्रविश सहसा निर्विकल्पे समाधौ ॥

व्याघ्रीव तिष्ठति जरा परितर्जयन्ती
रोगाश्च शत्रव इव प्रहरन्ति देहम् ।
आयुः परिस्रवति भिन्न घटादिवाम्भो
लोकस्तथाप्य हितमाचरतीति चित्रम् ॥

अजानन् दाहात्म्यं पतति शलभो तीव्रदहने
स मीनोऽप्यज्ञानाद्बडिशयुतमश्नाति पिशितम् ।
विजानन्तोऽप्येते वयमिह विपज्जालजटिलान्
न मुञ्चामः कामानहह गहनी मोहमहिमा ॥
अवश्यं यातारः चिरतरमुषित्वापि विषया
वियोगे को भेदस्त्यजति न जनो यत्स्वयममून् ।
व्रजन्तः स्वातन्त्र्यादतुलपरितापाय मनसः
स्वयं त्यक्त्वा ह्येते शमसुखमनन्तं विदधति ॥
योगस्य प्रथमं द्वारं वाङ्निरोधोऽपरिग्रहः ।
निराशा च निरीहा च नित्यमेकान्तसेविता ॥
यल्लाभान्नापरं लाभं यद्भूत्वा न पुनर्भवः ।
यज्ज्ञात्वा न पुनर्ज्ञेयं तद्ब्रह्मेत्यवधारय ॥

रज्ज्वज्ञानाद्भाति रज्जुर्यथाहिः स्वात्माज्ञानादात्मनो जीव भावः ।
आप्तोक्त्या हि भ्रान्तिनाशे स रज्जुर्जीवो नाहं देशिकोक्त्या शिवोहम् ॥

रज्ज्वज्ञानाद्भुजङ्गस्तदुपरि सहसा भाति मन्दान्धकारे स्वात्माज्ञानात्तथासौ भृशमसुखमभूदात्मनो जीवभावः । आप्तोक्त्या हि भ्रमान्ते स च खलु विदिता रज्जुरेका तथाहं कूटस्थो नैव जीवो निजगुरुवचसा साक्षिभूतः शिवोऽहम् ॥

नित्योऽहं निर्विकल्पोऽहं निराकारोऽहमव्ययः ।
सदा मत्सन्निधानेन चेष्ठते सर्वमिन्द्रियम् ॥
सच्चिदानन्द रूपोऽहं परिपूर्णोऽस्मि सर्वदा ।
ब्रह्मैवाहं न संसारी मुक्तोऽहमिति भावयेत् ॥

जीवभाव जगद्भावबाधे प्रत्यगभिन्नं ब्रह्मैवाव शिष्यते अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगन्धवच्च यत् । अनाद्यनन्त महतः परं ध्रुवं तदेव शिष्यत्यमलं निरामयम् ॥

नाहं मनुष्यो न च देवयक्षौ न ब्राह्मण क्षत्रिय वैश्य शूद्राः न ब्रह्मचारी न गृही वनस्थो भिक्षुर्न चाहं निजबोधरूपः ।

मनश्चक्षुरादेर्वियुक्तः स्वयं यो मनश्चक्षुरादेर्मनश्चक्षुरादिः ।
मनश्चक्षुरादेरगम्यः स्वरूपः स नित्योपलब्धिस्वरूपोऽहमात्मा ॥
भक्तिर्भवे मरणजन्मभयं हृदिस्थं स्नेहो न बन्धुषु न मन्मथजा विकाराः ।
संसर्गदोषरहिता विजना वनान्ता वैराग्यमस्ति किमतः परमर्थनीयम् ॥
शब्दादयः पञ्चभिरेव पञ्च पञ्चत्वमापुः स्वगुणेन बद्धाः ।
कुरङ्गमातङ्गपतङ्गभृङ्ग मीना नरः पञ्चभिरञ्चितः किम् ॥
य एषु मूढा विषयेषु बद्धा रागोरुपाशेन सुदुर्दमेन ।
आयान्ति निर्यान्त्यध ऊर्ध्वमुच्चैः स्वकर्मदूतेन जवेन नीताः ॥
अर्थमनर्थं भावय नित्यं नास्ति ततः सुखलेशः सत्यम् ।
पुत्रादपि धनभाजां भीतिः सर्वत्रैषा विहिता नीतिः ॥
मूढ जहीहि धनागमतृष्णां कुरु सद्बुद्धिं मनसि वितृष्णां ।
यल्लभते निजकर्मोपात्तं वित्तं तेन विनोदय चित्तम् ॥
अर्थानामर्जने दुःखं तथैव परिपालने ।
नष्टे दुःखं व्यये दुःखं धिगर्थं क्लेशकारिणम् ॥
पूर्णात्मानात्मभेदात्त्रिविधमिह परं बुद्धयवच्छिन्नमन्य-
त्तत्रैवाभासमात्रं गगनमिव जले त्रिप्रकारं विभाति ।
अम्भोऽवच्छिन्नमस्मिन्प्रतिफलितमतः पाथसोऽन्तर्बहिश्च
पूर्णावच्छिन्नयोगे व्रजति लयमविद्या स्वकार्यैः सहैव ॥
आत्मा चिद्वित्सुखात्मानुभवपरिचितः सर्वदेहादिमन्ता
सत्येवं मूढबुद्धिर्भजति ननु जनोऽनित्यदेहात्मबुद्धिम् ।
बाह्योऽस्थिस्नायुमज्जापलरुधिरवसाचर्ममेदो
युगन्तर्विण्मूत्रश्लेष्मपूर्णं स्वपरवपुरहो संविदित्वापि भूयः ॥
देहस्त्रीपुत्रमित्रानुचरहयवृषास्तोषहेतुर्ममेत्थं
सर्वे स्वायुर्नयन्ति प्रथितमलममीमांसमीमांसयेह ।
एते जीवन्ति येन व्यवहृतिपटवो येन सौभाग्यभाज-
स्तं प्राणाधीशमन्तर्गतममृतममुं नैव मीमांसयन्ति ॥

भ्रान्ति विना त्वसंगस्य सच्चिदानन्दरूपिणः ।
न घटेतार्थसम्बन्धो नभसो नीलिमादिवत् ॥
ब्रह्मैवाहमिदं जगच्च सकलं चिन्मात्रविस्तारितं
शेषं चैतदविद्यया त्रिगुणया सर्वं मया कल्पितम् ।
इत्थं यस्य दृढामतिः सुखतरे नित्ये परे निर्मले
चाण्डालोऽपि स तु द्विजोऽस्तु गुरुरित्येषा मनीषा मम ॥
जाग्रत्स्वप्नसुषुप्तिषु स्फुटतरा या संविदुज्जृम्भते
या ब्रह्मादिपिपीलिकान्ततनुषु प्रोताजगत्साक्षिणी ।
सैवाहं न च दृश्य वास्त्विति दृढप्रज्ञापि यस्यास्ति चेच्चा-
ण्डालोऽपि स तु द्विजोऽस्तु गुरुरित्येषा मनीषा मम ॥
दृष्टिः स्थिरा यस्य विनैव दृश्याद्वायुः स्थिरोयस्य विनावरोधात् ।
चित्तं स्थिरं यस्य विनावलम्बात्स एव योगी स गुरुः स सेव्यः ॥
यावन्न पश्येदखिलं मदात्मकं तावन्मदाराधनतत्परो भवेत् ।
श्रद्धालुरत्यूर्जितभक्तिलक्षणो यस्तस्य दृश्याऽहमहर्निशं हृदि ॥
आत्मा त्वं गिरिजा मतिः सहचराः प्राणाः शरीरं गृहं
पूजा ते विषयोपभोगरचना निद्रा समाधिस्थितिः ।
सञ्चारः पदयोः प्रदक्षिणपदं स्तोत्राणि सर्वा गिरो
यद्यत्कर्म करोमि तत्तदखिलं शम्भो तवाराधनम् ॥
सलिले सैन्धवं यद्वत्साम्यं भजति सर्वतः ।
तथात्ममनसोरैक्यं समाधिरभिधीयते ॥
अनादिमायया सुप्तो यदा जीवः प्रबुद्ध्यते ।
अनिद्रमजमस्वप्नमद्वैतं बुध्यते तदा ॥
तयोर्विभेदोऽयमुपाधिकल्पितो न वस्तुतः कश्चिदुपाधिरेषः ।
ईशस्य माया महदादिकारणं जीवस्य कार्यं शृणु पञ्चकोषम् ॥
एतावुपाधी परजीवयोस्तयोः सम्यङ्निरासे न परो न जीवः ।
राज्यं नरेन्द्रस्य भटस्य खेटकस्तयोरपोहे न भटो न राजा ॥
प्रारब्धं पुष्यति वपुरिति निश्चित्य निश्चलः ।

धैर्यमालम्ब्य यत्नेन स्वाध्यासापनयं कुरु ॥

बुद्धयादिसर्वदृश्यसाक्षिलक्षणं यन्मेस्वरूपं तत्सर्वाधिष्ठानभूतं निरस्तसमस्तानर्थरूपं स्वप्रकाश चिदात्मकं ब्रह्मेत्येवं धीमहि (ध्यायेम) ।

अद्वितीय परमानन्द एव ब्रह्म। तच्च जीवस्य वास्तवं स्वरूपम्। मायया च सर्वज्ञत्वादिविशिष्टं जगदुपादानं निमित्तं चेत्यौपनिषदाः ।

अगमन्मे मनोऽन्यत्र साम्प्रतं च स्थिरी कृतम् ।
एवं यो वेत्ति धीवृत्तिं तद्ब्रह्मेत्यवधारय ॥

घटद्रष्टा घटाद्भिन्नः सर्वथा न घटो यथा ।
देहद्रष्टा तथा देहो नाह मित्यवधारय ॥

न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥

यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः ।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥

एवं वेदान्तवाक्यजन्या अखण्डाकारवृत्त्या अविद्यानिवृत्तौ तत्कल्पितसकलानर्थनिवृत्तौ परमानन्दः सन् कृतकृत्यो भवति ।

स्वमिन्नहं न पृथिवी न जलं न तेजो न स्पर्शनो न गगनो न च तद्गुणा वा ।
नापीन्द्रियाण्यपितु विद्धिततो विशिष्टोयःकेवलोऽस्तिपरमःस शिवोऽहमस्मि॥

यस्य प्रसादादहमेव विष्णुर्मय्येव सर्वं परिकल्पितं च ।
इत्थं विजानामि सदात्मरूपं तस्यांघ्रिपद्मं प्रणतोऽस्मि नित्यम् ॥

नमो नमस्ते गुरवे महात्मने विमुक्तसङ्गस्य सदुत्तमाय ।
नित्याद्वयानन्दरसस्वरूपिणे भूम्ने सदापारदयाम्बुधाम्ने ॥

मातर्मेदिनि तात मारुत सखे तेजः सुबन्धो जल
भ्रातर्व्योम निबद्ध एव भवतामेषः प्रणामाञ्जलिः ।
युष्मत्संगवशोपजातसुकृतोद्रेकस्फुरन्निर्मल-
ज्ञानापास्तसमस्तमोहमहिमा लीये परे ब्रह्मणि ॥

॥ हरिः ॐ तत् सत् ॥

अजमपि जनियोगं प्रापदैश्वर्ययोगा-
दगति च गतिमत्तां प्रापदेकं ह्यनेकम्,
विविधविषयधर्मग्राहिमुग्धेक्षणानां
प्रणतभयविहन्तृ ब्रह्म यत्तन्नतोऽस्मि ।

  

जयतु जयतु नित्यं शङ्कराचार्यवर्यो
जयतु जयतु तस्याद्वैतविद्यानवद्या,
जयतु जयतु लोके तच्चरित्रं पवित्रं
जयतु जयतु भक्तिस्तत्पदाब्जे जनानाम् ।